| विषयाः | पृ० पं० | पृ० पं० |
|---|---|---|
| गर्भाधानादिषु, आवसथ्यादिषु च ब्राह्मणभोजने संख्या ... ... ... ... | ११२—१ | ११२-११ |
| आहुतिद्रव्यपरिमाणं तत्र दैवतीर्थादिनि-यमश्च ... ... ... ... | ११२-१२ | ११३-१० |
| संस्कृताग्नेर्मुखेनैव धमनं न पाण्यादिना ... | ११३-११ | ११३-१६ |
| प्रतिमाद्रव्यानुपादाने द्रव्यकथनम् ... | ११३-१७ | ११३-२२ |
| पृषदाज्यम् ... ... ... ... | ११३-२३ | ११३-२४ |
| आमिक्षा ... ... ... ... | ११३-२५ | ११३-२६ |
| मधुरत्रयम् ... ... ... ... | ११४—१ | ११४—२ |
| त्रिसमम् ... ... ... ... | ११४—३ | ११४—४ |
| चतुःसमम् ... ... ... ... | ११४—५ | ११४-१० |
| सर्वगन्धाः ... ... ... ... | ११४-११ | ११४-१३ |
| त्रिसुगन्धम् ... ... ... ... | ११४-१४ | |
| यक्षकर्दमः ... ... ... ... | ११४-१५ | ११४-१६ |
| पञ्चामृतम् ... ... ... ... | ११४-१७ | ११४-१६ |
| पञ्चगव्यम् ... ... ... ... | ११४-२० | ११५—४ |
| पञ्चभङ्गाः ... ... ... ... | ११५—५ | ११५—७ |
| रत्नपञ्चकम् ... ... ... ... | ११५—८ | ११५-११ |
| नव महारत्नानि ... ... ... | ११५-१२ | ११५-१५ |
| सप्तधान्यम् ... ... ... ... | ११५-१६ | ११५-१७ |
| सप्तधातवः ... ... ... ... | ११४-१८ | ११५-२० |
| अष्टाङ्गोऽर्घः ... ... ... ... | ११५-२१ | ११५-२३ |
| सर्वौषध्यः ... ... ... ... | ११५-२४ | ११५-२६ |
| मौद्यायोषध्यः ... ... ... | ११६—१ | ११६-११ |

# शुद्धिपत्रम् ।

—:o:—

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| खङ्ग | खड्ग | २ | २१ |
| दारोप्य | द्वारोप्य | ४ | ४ |
| शुभ्रा | शुभ्रा | ६ | १० |
| वैतानिकाग्नि | वैतानिकाग्नि | ६ | २ |
| समदर्शिनो | सम्मर्शिनो | ६ | १६ |
| मार्कण्डेयं | मार्कण्डेयं | १२ | ४ |
| सर्ववद् | सर्ववेद् | १४ | १८ |
| तदप्य | तद्द्य | १७ | २२ |
| *सामादानी* | *सामाद्दीना* | १६ | ६ |
| विरोध | विरोधे | २३ | २० |
| दातुरिष्टो | दातुरिष्टौ | २५ | २४ |
| रप्येवम | रप्येवम् | २८ | १ |
| स्मृत्यर्था | स्मृत्यर्थां | २६ | १५ |
| पुण्येन | पुण्येन | ३० | १२ |
| साद्धिः | सद्भिः | ३० | २३ |
| पुत्रेष्टि | पुत्रेष्टि | ३१ | ८ |
| व्यावृत्यर्थं | व्यावृत्त्यर्थं | ३१ | १२ |
| वैदिके | वैदिके | ४५ | १५ |
| त्रतायुगे | त्रेतायुगे | ४८ | २४ |
| विरोध | विरोधे | ४६ | १४ |
| तपा | तपो | ५१ | २३ |
| दैव | दैव | ५५ | २१ |
| शाब्दने | शाब्देन | ५८ | ११ |
| सर्वता | सर्वतो | ६२ | १० |
| पिपिलिका | पिपीलिका | ६४ | १८ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| यहृल्पं ... | ... यहृद्पं ... | ... ... ७२ | १८ |
| संदेह ... | ... संदेहे ... | ... ... ७५ | १६ |
| मानौ ... | ... मात्रौ .. | ... ... ६६ | १६ |
| शुवौ ... | ... शुचौ ... | ... ...१०२ | २४ |
| स्नुवाम्र | ... स्नुवाग्रे ... | ... ...१०६ | २४ |
| त्यग्नधेये | ... त्यग्न्याधेये | ... ...११२ | ३ |
| तग्नचै ... | ... तग्नेच ... | .. ...११४ | २५ |

श्रीगणेशाय नमः ।

सरस्वत्यै नमः ।

# वीरमित्रोदयस्य परिभाषाप्रकाशः ।

---

सिन्दूरारुणगण्डमण्डलगलद्दानाम्भसां धारया
सिञ्चन्तं पदसक्तभक्तजनताविघ्नौघधूलीरिव ।
धम्मिल्लालिमिवालिवृन्दमनिशं मूर्ध्ना दधानं हर-
प्रेयांसं गिरिजाङ्गजं गजमुखं वन्देऽरविन्देक्षणम् ॥ १ ॥

दधानं भृङ्गालीरनिशममले गण्डयुगले
ददानं सर्वार्थान्निजचरणसेवासुकृतिने ।
दयाधारं सारं सकलनिगमानामपि परं
गजास्यं स्मेरास्यं तमिह कलये चित्तनिलये ॥ २ ॥

हृदयभुवि मुनीन्द्रैः सेविता नारदाद्यैः
तनुरुचिभिरजस्रं पारदाभां पिबन्ती ।
अतिविततगभीरग्रन्थसिन्धाविदानीं
प्रभवतु करुणातः शारदा पारदा नः ॥ ३ ॥

स्फूर्जद्धूर्जटिताण्डवे प्रतिदिशं वेगोच्छलज्जाह्नवी-
वीचीध्वाननिपीतभृङ्गिमुरजस्फारस्वनाडम्बरे ।
लालाटामृतरश्मिखण्डमसकृद्व्योमस्थितेऽर्द्धे विधो-
राघाताद्घसंचयं दलयतु मोत्तालतालायितम् ॥ ४ ॥

प्रातःकाले प्रयातो दिशिदिशि विबुधैरर्चितः पुष्पवृष्ट्या
प्रेमार्द्रैर्दृष्टिपातैर्मनसि मनसिजं दीपयन् गोपिकानाम् ।

कृत्वाऽग्रे धेनुसङ्घं सजलजलधरश्यामलो वेत्रपाणिः
कालिन्दीकूलकेलिः प्रदिशतु भवतां वाञ्छितं नन्दसूनुः॥५॥

श्रीकाशीराजवंशप्रबलजलनिधेर्मेदिनीमल्लनामा
पूर्णः पीयूषरश्मिः समजनि जननानन्दसंदोहसिन्धुः ।
बन्धुर्दीनद्विजानां तदनु च समभूदूर्जितैरर्जुनाभो
गर्जत्प्रत्यर्थिसैन्यप्रमथननिपुणैरर्जुनो भूमिपालः ॥ ६ ॥

बुन्देलक्षितिपालवंशविलसद्रत्नं प्रपन्नं विना
यः पृथ्वीं निखिलां विधाय वशगां राज्यं चकाराद्भुतम् ।
शौर्यौदार्यगुणैरगण्यमहिमा दाता ऽवदाताशयः
श्रीमान् कीर्त्तिसुधासमुद्रलहरीनिर्धौतदिङ्मण्डलः ॥ ७ ॥

तस्मादभूद्विमलविष्णुपदावलम्बो
लम्बोदराङ्घ्रिकमलार्चनवीतविघ्नः ।
निघ्नन् रणे प्रतिभटान् प्रकटोग्रदर्पो
भूपालसंघतिलको मलखाननामा ॥ ८ ॥

सदासमाराधनतुष्टरुद्रः प्रतापरुद्रस्तनयस्तदीयः ।
कृपासमुद्रः शरणागतानां बभूव राजा वसुधाधिपानाम्॥९॥

ततोऽभूदुद्भूतप्रचुरगुणगाम्भीर्यगरिमा
हिमाद्रिस्थेमाऽसौ मधुकरनृपः शूरविकृपः ।
यमालिङ्ग्यालिङ्ग्य प्रणयरसिकं प्रेमतरला
न पूर्वेषामेषा स्मरति विरहं हन्त कमला ॥ १० ॥

सत्कीर्त्तिर्नृपवृन्दवन्दितपदः संग्रामयज्ञाङ्गणे
दीक्षावान् सकलं निपीय धवलैः सोमं यशोराशिभिः ।
शश्वत्प्रज्वलति प्रतापदहने खड्गस्रुगार्पिताः
यो वीरः प्रजुहाव वैरिनिवहप्राणाहुतीरन्वहम् ॥ ११ ॥

दिनकर इव विस्फुरत्प्रतापो हिमकरवत्कमनीयकान्तिपूरः ।
करिकर इव यत्करः सदानो मधुकरसाहमहीपतिर्महीयान् ॥१२॥

एते दक्षिणभूमिभूमिपतयः प्राच्या उदीच्या इमे
राजानो नृपवृन्दवन्दितपदाम्भोज प्रतीच्या अमी ।
वन्दन्ते नतमौलि मौलिविलसद्दूर्वाङ्कुरास्त्वामिति
द्वाःस्था यस्य वदन्ति सम्भ्रमभरादद्धा निबद्धाञ्जलि ॥१३॥

दण्डेन क्षोणिचक्रं भ्रमयति निभृतं यत्प्रतापः कुलालो
येनाकृष्टाऽसिवल्ली दिशिदिशि तनुते हन्त हल्लीसकानि ।
उल्लङ्घ्याम्भोधीन् यदीया व्रजति दश दिशः कीर्तिवल्लीमतल्ली
तादृक्पुत्रस्तदीयः समजनि जगतीमण्डले वीरसिंहः ॥१४॥

अस्ति स्वस्तिलकायमानकरकानीहारहारप्रभा
प्रादुर्भावपराभवव्यसनिभिर्लिम्पन् यशोभिर्दिशः ।
मुष्णन् वैरिमहांसि विज्ञजनतां पुष्णन् समं बन्धुभिः
दिग्विख्यातबुंदेलवंशतिलकः श्रीवीरसिंहो नृपः ॥ १५ ॥

कस्तावद्बलिकर्णभार्गवमहादानप्रमाणस्तवः
कश्चासौ कुरुपाण्डुपाण्डुरयशःप्रस्तावनाविस्तरः ।
यावद्वर्षति वीरसिंहनृपतिर्दृष्टोरिमाः काञ्चनीः
धाराः प्राट्पि तावदञ्जनरुचिर्धारा न धाराधरः ॥ १६ ॥

वीरः श्रीवीरसिंहः क्षितिरमणमणिः पाणिना दानकाले
दर्भाम्भोहेमधाराविनरणमकरोद्भागशः संविभज्य ।
अर्थिभ्यो हेम दर्भान्प्रतिनृपतिमहासौधगर्भावनीभ्यः
प्रादादम्भःप्रवाहान् प्रतिनृपतिमृगीलोचनालोचनेभ्यः॥१७॥

एते भाविनि वीरसिंहनृपतौ दानाद्वितीये भुवि
द्वैधेनैव हृदा द्विधा ननु भविष्यन्तीति चिन्ता यत ।

धाशा कामगवी पशुर्विरचिता चिन्तामणिर्ग्रावतां
नीतो दुर्वहदारुदारुणतनुर्दैवद्रुमोऽयं कृतः ॥ १८ ॥

नानादानविधानकौशलमयीमाकल्परम्यां मही
द्रव्यदर्पचयस्वरूपमचिरादारोप्य बीजं ततः ।
तच्चासिच्य विविच्य विलसद्भक्तिद्रवैः कल्पितो
भूमौ कल्पमहीरुहोऽत्र विधिना श्रीवीरसिंहः कृती ॥१९॥

पीतध्वान्तेन नित्यं प्रसृमरमहसा मुग्धदुग्धाब्धिभासा
वीरः श्रीवीरसिंहः क्षितितिलकलसत्कीर्त्तिसोमेन साकम् ।
अद्धा स्पर्द्धां करिष्यत्ययमिति मिषतो लाञ्छनस्याञ्जनाक्तं
वक्त्रं कृत्वा विधात्रा दिशिदिशि शनकैर्भ्राम्यते शीतरश्मिः॥२०॥

एषा शेषांशुशुभ्रैर्निजरुचिनिचयैर्निर्ज्जितोन्निद्रचन्द्रा
सान्द्रा विक्षिप्य वीचीर्वहति शतमुखी यस्य सत्कीर्त्तिसिन्धुः
तस्याः काऽपि प्रणाली वहति सुरनदी नर्मदा काऽपि रेखा
कावेरी काऽपि काऽपि प्रसरति सरयूश्चन्द्रभागा च काऽपि॥२१॥

सेवामेवास्य राज्ञः कलय मलयजस्वच्छकीर्त्तेः पितॄणां
मार्गं मा गा निरागास्तनय भवतरां निष्कृपस्तत्कृपाणः ।
इत्थं श्रीवीरसिंहक्षितिरमणमणेः सर्वतः पर्वतस्थाः
शिक्षां प्रत्यर्थिबाला निरवधि तनयं स्वंस्वमध्यापयन्ति॥२२॥

सूनुस्तस्य गुणैस्त्रिलोकविदितैः श्रेष्ठः कनिष्ठीकृत-
प्रौढप्रौढनरेन्द्रचारुचरितश्चामीकराभो युवा ।
वीरः श्रीलज्जुकारसिंहनृपतिः संग्रामसिंहो रण-
स्फूर्जत्स्फारकृपाणपाणिरारिभिः प्रोदग्रमालोक्यते ॥२३॥

गायन्ति यस्य चतुरर्णवतीरकुञ्ज-
गुञ्जन्मदोद्धतमधुव्रतकैतवेन ।

नीहारहारहरिणाङ्कमयूखभांसि
भूयांसि दिङ्मृगदृशो बहुशो यशांसि ॥ २४ ॥

येनाकारि निजारिपार्थिववधूवाष्पाम्बुसिक्ता मही
रिक्ता येन कृताश्च कोपानिवहाः प्रत्यर्थिपृथ्वीभुजाम् ।
दानं यस्य निरस्यति क्षितिपतेः कर्णादिकानां यशः
तस्य श्रीलजुकारसिंहनृपतेः साम्यं कथं कथ्यताम् ॥ २५ ॥

कैलासं गिरिशं हिमं हिमगिरिं शीतांशुमुक्तामणीन्
नीरं क्षीरपयोनिधेः करिवरं जातं च पाथोनिधेः ।
यत्कीर्त्तिर्महसा जिगाय धरणीधौरेयधुर्यः शतं
वर्षाण्यत्र जुकारसिंहनृपतिर्ज्जीयात्स भर्त्ता भुवः ॥ २६ ॥

राज्यं प्राप जुकारसिंहनृपतिर्यस्याग्रतो भूपतेः
तत्पुत्रोऽपि गुणार्णवः समजनि श्रीविक्रमार्को नृपः ।
तत्सूनुर्नरसिंहदेवनृपतिस्तं वीरसिंहं विना
भेजे राज्यपरम्परासुखमिदं मन्ये महेन्द्रोऽपि किम् ॥२७॥

गोपाचलस्थधरणीसुरवंशपद्म-
चण्डांशुराविरभवद् द्विजजातिवन्धुः ।
श्रीनन्दनन्दनपदद्वयचित्तवृत्तिः
श्रीहंसपण्डित इतिप्रथमानकीर्त्तिः ॥ २८ ॥

यो दूरवारकुलभूरनुभुतसौख्यः
श्रीहंसपण्डित इति प्रथितः पृथिव्याम् ।
आसीद्विवेकचतुरश्चतुरः समग्र-
वेदानधीत्य कृतकर्मकलाकलापः ॥ २९ ॥

यज्ञादिकर्मकरणाय किलावतीर्णः
पूर्णः श्रिया निजकुलाभरणायमानः ।

मिश्रः परः परशुराम इति द्विजेन्द्रः
तस्याभवत् स तनयो विनयोदितश्रीः ॥ ३० ॥

यो दर्भाग्रसमानबुद्धिविभवः मख्यातकीर्तिर्गुणैः
श्रौतस्मार्त्तसमस्तकर्मकुशलाचण्डीश्वराख्याद्गुरोः ।
अध्यायान्तमधीत्य शास्त्रमखिलं मीमांसया मांसलः
शश्वत्खण्डितखण्डनः समभवत्संख्यावतामग्रणीः ॥ ३१ ॥

पुत्रस्तस्य विभाति सद्गुणनिधिर्दीनाम्बुरुट्शाम्बुधिः
धीरः श्रीयुतमित्रमिश्रसुकृती कल्याणकल्पद्रुमः ।
कीर्त्तीर्दिक्षु विदिक्षु यस्य रजनीजानिप्रभाभास्वरा
गायन्ति द्विजदारका हिमहरक्षीराब्धिशुभ्रा भुवि ॥ ३२ ॥

चातुर्यं चतुराननस्य निभृतं गाम्भीर्यमम्भोनिधे-
रौदार्यं विबुधद्रुमस्य मधुरां वाचं च वाचस्पतेः ।
धैर्यं धर्मसुतस्य शर्म सकलं देवाधिपस्याहरत्-
श्रीमान् ख्याततनयः सदा सविनयः श्रीमित्रसेनस्सुधीः ॥ ३३ ॥

दाता दापयिता दयादमपरः श्रीमानमात्सर्यवान्
धीरोऽधीतसमस्तशास्त्रनिवहव्याख्यारसख्यातिमान् ।
नानानाटकसट्टकप्रकरणग्रन्थौघतात्पर्यवि-
द्वादे न्यक्कृतवावदूकनिचयो यो गीतकीर्त्तिर्बुधैः ॥ ३४ ॥

मन्त्रे यो रसनायितः प्रतिदिनं दाने च हस्तायितो
विश्वासे हृदयायितो नृपसभाभूमीषु भूषायितः ।
यो विद्वन्निकषायितः प्रविलसत्कीर्त्यालवालायितः
श्रीमद्वीरमहीपतेः प्रतिपदं प्रेमास्पदं योऽजनि ॥ ३५ ॥

तेनानेकनिबन्धसिन्धुमनिशं निर्मथ्य बुद्ध्या पुन-
र्वेदान् साङ्गपदक्रमोपनिषदान् श्रुत्वाऽवधार्यापि च ।

धर्मार्थादिपुमर्थनिर्णयपरः श्रीवीरसिंहाज्ञया
ग्रन्थोऽयं रचितः परोपकृतये श्रीवीरमित्रोदयः ॥ ३६ ॥

मा कुर्वन्तु सुधा बुधाः परिचयं ग्रन्थेषु नानाविधे-
ष्वत्यन्तं नहि तेषु सर्वविषयः कश्चित् कचिद्वर्त्तते ।
पश्यन्तु प्रणयादनन्यमनसो ग्रन्थं मदीयं त्विमं
धर्माधर्मसमस्तनिर्णयविधिर्यस्मिन् दरीदृश्यते ॥ ३७ ॥

श्रुत्वा वेदगिरो विमृश्य बहुशस्तद्भाष्यवृत्त्यादिकं
दृष्ट्वाऽष्टादशसंख्यमुज्ज्वलमतिस्तादृक् पुराणोच्चयम् ।
काव्ये व्याकरणे तथा विवरणे यो ऽनन्यसाधारणः
स श्रीमान् विदधाति मित्रसुकृती श्रीवीरमित्रोदयम् ॥३८॥

दत्वादत्वा द्विजेभ्यः कनकगिरिपरिस्पर्द्धिनो हेमराशी-
नाशीर्भिर्वर्द्धितश्रीर्यमिह गुणनिधिं वीरसिंहो न्ययुङ्क्त ।
दृष्ट्वा तत्तन्मुनीनां मतमतुलधिया वीक्ष्य तादृक्प्रबन्धान्
वक्ति श्रीमित्रमिश्रद्विजवरतिलकः संग्रहं धर्मशास्त्रे ॥ ३९ ॥

ग्रन्थेऽस्मिन् परिभाषाप्रकाश एव प्रकाशितः पूर्वम् ।
संस्काराख्यस्तस्मादथाह्निकस्य प्रकाशस्तु ॥
पूजाप्रकाशनामा कथितस्तदनु प्रतिष्ठाख्यः ।
श्रीराजधर्मनामा ततः प्रकाशः प्रकाशितः श्रव्यः॥
व्यवहाराख्यस्तस्मात्प्रकाश एव प्रकाशितः कृतिना ।
शुद्धिप्रकाशनामा ततः परं कीर्त्तितः सुधिया ॥
श्राद्धप्रकाशतीर्थप्रकाशकौ द्वौ क्रमात्कथितौ ।
दानव्रतप्रकाशौ कथितौ तस्मात्परं विदुषा ॥
समयः प्रकाशितोऽस्मात्तस्माज्ज्योतिःप्रकाशाख्यः ।
शान्तिः प्रकाशिताऽथो कर्मविपाकः प्रकाशितः परतः ॥

तदनु चिकित्सा तस्मात्प्रायश्चित्तप्रकाशाख्यः ।
नानापदार्थशाली प्रकीर्णकाख्यः प्रकाशोऽतः ॥
अथ लक्षणप्रकाशो यस्मात्सर्वस्य लक्षणज्ञानम् ।
भक्तिप्रकाशमोक्षप्रकाशकौ द्वौ ततः परं गदितौ ॥
श्रीमित्रमिश्रकृतिना समाज्ञया वीरसिंहस्य ।
द्वाविंशतिः प्रकाशाः प्रकाशिता धर्मशास्त्रेऽस्मिन् ॥
तत्रादौ परिभाषायाः पदार्थक्रम उच्यते ।
धर्मप्रमाणं प्रथमं तत्र वेदनिरूपणम् ॥
पुराणं स्मृतयस्तद्वदङ्गानि च यथाक्रमम् ।
प्रामाण्यमागमानां च सम्यगत्र विचारितम् ॥
श्रुत्यादीनां विरोधे च बलाबलमुदीरितम् ।
धर्मस्वरूपं तु ततो धर्माः साधारणा अपि ॥
असाधारणधर्माश्च युगधर्मास्ततः परम् ।
हेतुतस्तु तथा धर्मः सम्यगत्र निरूपितः ॥
निषिद्धदेशाश्च ततः फलतो धर्मनिश्चयः ।
सर्वोपयोगिनः सर्वे पदार्थाः परिभाषिताः ॥
श्रीमित्रमिश्रविदुषा ग्रन्थेऽस्मिन्विदुषां मुदे ।

तत्र तावत्प्रमाणान्याह

मनुः,

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेवच ॥ इति ।

वेदो मन्त्रब्राह्मणयोर्वेदनामधेयमित्यापस्तम्बाद्युक्तो मन्त्रब्राह्मणसमुदायः । अखिलः, लिङ्गवाक्यप्रकरणस्थानसमाख्यानुमितोऽतिदेशकल्प्यश्च । यद्वा व्याख्यास्यामः, त्रिभिर्वेदैर्विधीयते, इत्यापस्तम्बादिवचनात्त्रय्या एव धर्ममूलत्वं नाथर्वणस्येति

शङ्काव्यावृत्त्यर्थं वाऽखिलग्रहणम् । आथर्वणस्य प्राधान्येन वैतानिकाग्निहोत्रादिधर्मप्रतिपादकत्वेऽपि तुलापुरुषशान्त्यादिसर्ववर्णसाधारणधर्मप्रतिपादकत्वाद्युक्तं धर्ममूलत्वमिति भावः । धर्मग्रहणमधर्मस्याप्युपलक्षणम् । तस्यापि तत्त्वज्ञानप्रतिबन्धकीभूतान्तःकरणाशुद्धिहेतोर्हेयत्वेनावश्यं प्रतिपाद्यत्वादिति । मूलं प्रमाणम् । तद्विदां वेदविदाम् । एतच्च न स्मृत्यादेः स्वातन्त्र्येण प्रामाण्यं किंतु वेदमूलकतयेति ज्ञापयति । स्मृतिर्याज्ञवल्क्यादिधर्मशास्त्रम् । शीलं ब्रह्मण्यता, देवपितृभक्तता, सौम्यता, अपरोपतापिता, अनसूयता, अपारुष्यं, मैत्रता, प्रियवादिता, कृतज्ञता, शरण्यता, कारुण्यं, प्रशान्तिश्चेति त्रयोदशविधं हारीतोक्तम् । अत्र प्रवृत्तिभिन्नाद्रोहाद्याचारस्य प्रामाण्यमुच्यते आचारश्चेत्यत्र तु प्रवृत्त्यात्मकस्येत्यपौनरुक्त्यम् । आचारः विवाहादौ कङ्कणबन्धनाद्यनुष्ठानम् । साधूनामिति । क्वचिद्धर्मत्वसंदेहे सति वैदिकसंस्कारवासितान्तःकरणानां साधूनामेकत्र पक्षे आत्मनः मनसः परितोषस्तुष्टिर्धर्मे प्रमाणमिति कल्पतरुः। तथाच तैत्तिरीये धर्मसंदेहमुपन्यस्य ये तत्र ब्राह्मणाः समदर्शिनो युक्ता आयुक्ता अरूक्षा धर्मकामाः स्युः यथा ते तत्र वर्त्तेरन् तथा तत्र वर्त्तेथा इति । अनेन पर्षद्रूपमपि प्रमाणमुक्तं भवति । अथवा आचारश्चैव साधूनामिति छेदः । एवं चावेदविदामपि क्षीणदोषपुरुषाणामाचारः प्रमाणम् । तथाच प्रच्छन्द्राद्याचारस्तत्पुत्रादीन्प्रति भवति प्रमाणम् । आत्मनस्तुष्टिरेवचेति वैकल्पिकेऽर्थे । सा चात्मानं प्रत्येव । तथाच

याज्ञवल्क्यः,

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥

सम्यक्सङ्कल्पाच्छास्त्राविरुद्धसङ्कल्पाज्जातः कामः मया भोजनव्यतिरेकेणोदकं न पातव्यमित्येवंरूपः । अथवा सम्यक्सङ्कल्पाद्रागादिरहितसङ्कल्पात् ज्ञानादुपजातं ब्राह्मणोपचिकीर्षायैव मनुना शीलत्वेनोक्तं सम्यक्संकल्पज इत्यनेनोच्यते इति कल्पतरुः । अत्रापि धर्मग्रहणमधर्मोपलक्षणम् ।

अत्र श्रुतिः षड्भागा । विधिनिषेधार्थवादमन्त्रनामधेयोपनिषद्भेदात् । तत्र विधेस्तावत्तद्विषयप्रवर्तनाबोधकत्वेन धर्मे प्रामाण्यं, यथा वायव्यं श्वेतमालभेत भूतिकाम इत्यादेर्द्रव्यदेवतासंयोगानुमितवायुदेवत्यागप्रवर्त्तनाबोधकत्वेन । निषेधस्य तु निवर्त्तनाबोधकत्वेन, यथा न कलञ्जं भक्षयेदित्यादेः । अर्थवादो द्विविधः प्रशंसार्थवादो निन्दार्थवादश्च । तत्राद्यो विध्यपेक्षितप्राशस्त्यसमर्पणेन, यथा वायुर्वै क्षेपिष्ठेत्यादिर्वायव्ययागादिप्रशंसार्थतया । द्वितीयस्तु निषेधापेक्षितनिन्दासमर्प्पणेन, यथा यदश्रु अशीर्यत तद्रजतमभवदित्यादिस्तस्माद्बर्हिषि रजतं न देयमित्यादिनिषिद्धरजतदाननिन्दार्थतया । कश्चिदर्थवादः प्रशंसार्थोऽपि संदिग्धार्थनिर्णायकत्वेन प्रमाणं, यथाऽक्ताः शर्करा उपदधाति तेजो वै घृतमित्यादिः । देवस्य त्वेत्यादिमन्त्राणां तु अनुष्ठेयार्थस्मारकत्वेन । ज्योतिष्टोमादिनामधेयानां तु भावनाकरणीभूतधात्वर्थपरिच्छेदकत्वेन । अनर्थकस्तोभानां तु गीतिकालपरिच्छेदकत्वेन । उपनिषदां तु अनर्थनिबर्हणसिद्धरूपब्रह्मज्ञानार्थत्वेनेत्येवमादि सर्वमाकरे स्फुटम् ।

याज्ञवल्क्यः,

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

पुराणं ब्राह्मादि वक्ष्यमाणम् । न्यायः प्रमाणादिनिरूपणशास्त्रं गौतमादिप्रणीतम् । मीमांसा जैमिनिप्रणीता कर्ममीमांसा, बादरायणप्रणीता ब्रह्ममीमांसा च । धर्मशास्त्रं मन्वादिप्रणीतम् । अङ्गानि, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । एतैरुपेताश्चत्वारो वेदाः । एतानि चतुर्दशविद्यानां स्वर्गाद्यपवर्गसाधनकर्मब्रह्मज्ञानानां स्थानानि निमित्तानि धर्मस्य च निमित्तानि । एतत्प्रमित एव धर्म इत्यर्थः । तथाच

**अङ्गिराः,**

स्वाभिप्रायकृतं कर्म यत्किंचित् ज्ञानवर्जितम् ।
क्रीडाकर्मेव बालानां तत्सर्वं निष्प्रयोजनम् ॥ ज्ञानवर्जितं शास्त्रीयज्ञानवर्जितमिति कल्पतरुः ।

**विष्णुपुराणे तु,**

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः ॥

इत्यष्टादश विद्या उक्ताः । तत्र चतुर्दश धर्मप्रधानाश्चतस्रः पुनर्दृष्टार्थप्रधानाः । धर्ममपि अनुषङ्गेण प्रमिमते इति न धर्मस्य च चतुर्दशेत्यनेन विरोधः ।

**अथ पुराणानि ।**

तत्र पुराणलक्षणं

**मात्स्ये,**

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥
प्रतिसर्गः संहारः । तद्विभागश्च

विष्णुपुराणे,

अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते ।
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥
तथाऽन्यन्नारदीयं च मार्कण्डेयं च सप्तमम् ।
आग्नेयमष्टमं चैव भविष्यं नवमं स्मृतम् ॥
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ।
वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम् ॥
चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम् ।
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् ।

पुराणपरिमाणं

श्रीभागवते,

ब्राह्मं दश सहस्राणि पाद्मं पञ्चोनषष्टि च ।
श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥
दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः ।
मार्कण्डं नव वाह्नं च दश पञ्च चतुःशतम् ॥
चतुर्दश भविष्यं स्यात्तथा पञ्च शतानि च ।
दशाष्टौ ब्रह्मवैवर्त्तं लैङ्गमेकादशैव तु ॥
चतुर्विंशतिवाराहमेकाशीतिसहस्रकम् ।
स्कान्दं शतं तथाचैकं वामनं दश कीर्त्तितम् ॥
कौर्मं सप्तदशाख्यातं मात्स्यं तच्च चतुर्दश ।
एकोनविंशं सौपर्णं ब्रह्माण्डं द्वादशैव तु ॥
एवं पुराणसंदोहश्चतुर्लक्ष उदाहृतः ।

मत्स्यपुराणे तु भागवतीयगणनातः षट्शत्याऽग्निपुराणं द्विशत्या च ब्रह्माण्डपुराणमधिकमुक्त्वाऽन्ते चतुर्लक्षमित्युपसं-

हृतं, तदद्‌रविप्रकर्षेण। भवन्ति हीदृशा अपि वादा यत्किञ्चि-न्न्यूनाधिकं शतं लब्ध्वा शतं मया लब्धमिति। एवं भागवतीय-मपि चतुर्लक्षवचनं व्याख्येयम्। याऽपि विष्णुपुराणे ब्रह्माण्डमा-दाय वायवीयत्यागेन या च ब्रह्मवैवर्त्ते वायवीयमुपादाय ब्रह्मा-ण्डपुराणपरित्यागेनाष्टादश संख्योक्ता सा कल्पभेदेन व्यवस्था-पनीया। काशीखण्डादयस्तु स्कान्दान्तर्गता एव। तथाच

प्रभासखण्डम्,

स्कान्दं तु सप्तधा भिन्नं वेदव्यासेन धीमता।
एकाशीतिसहस्राणि शतं चैकं च संख्यया॥
तस्याद्यो यो विभागस्तु स्कन्दमाहात्म्यसंयुतः।
माहेश्वरः समाख्यातो द्वितीयो वैष्णवः स्मृतः॥
तृतीयो ब्राह्मणः प्रोक्तः सृष्टिसंक्षेपसूचकः।
काशीमाहात्म्यसंयुक्तः चतुर्थः परिपठ्यते॥
रेवायाः पञ्चमो भागः सोज्जयिन्याः प्रकीर्त्तितः।
षष्ठस्तस्य विभागस्तु तयोर्माहात्म्यसूचकः॥
सप्तमो यो विभागोऽयं स्मृतः प्राभासिको द्विजाः। इति।
एतद्भिन्नान्युपपुराणानि। तथाच महापुराणान्युक्त्वोक्तं

कौर्मे महापुराणे,

अन्यान्युपपुराणानि मुनिभिः कथितानि तु।
अष्टादश पुराणानि श्रुत्वा संक्षेपतो द्विजाः॥
श्रुत्वा कथितानीत्यन्वयः। तानि च

तत्रैव,

आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम्।
तृतीयं नान्दमुद्दिष्टं कुमारेण तु भाषितम्॥

चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम् ॥
कापिलं मानवं चैव तथैवोशनसेरितम् ।
ब्रह्माण्डं वारुणं चैव कालिकाह्वयमेवच ॥
माहेश्वरं तथा साम्बं सौरं सर्वार्थसंचयम् ।
पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥ इति ।

ब्रह्मवैवर्त्तेऽपि,

आद्यं सनत्कुमारं च नारदीयं द्वितीयकम् ।
तृतीयं नारसिंहाख्यं शैवधर्मं चतुर्थकम् ॥
दौर्वासं पञ्चमं षष्ठं कापिलेयमतः परम् ।
सप्तमं मानवं प्रोक्तं शौक्रमष्टममेवच ॥
वारुणं नवमं प्राहुर्ब्रह्माण्डं दशमं स्मृतम् ।
कालीपुराणं च तत एकादशमुच्यते ॥
वासिष्ठलैङ्गं द्वादशमं माहेशं तु त्रयोदशम् ।
साम्बं चतुर्दशं प्रोक्तं सौरं पञ्चदशं स्मृतम् ॥
पाराशर्यं षोडशमं मारीचं तु ततः परम् ।
अष्टादशं भार्गवाख्यं सर्वधर्मप्रवर्त्तकम् ॥
एतान्युपपुराणानि सर्ववेदमयानि च ।

उपपुराणान्तर्गते नारदीयब्रह्माण्डपुराणे भिन्ने । एतान्युपपुराणानि पुराणेभ्य एव निर्गतानीति याज्ञवल्क्येन पुराणत्वेन संगृहीतानि । तथाच

मात्स्ये,

पाद्मे पुराणे यत्प्रोक्तं नरसिंहोपवर्णनम् ।
तदष्टादशसाहस्रं नारसिंहमिहोच्यते ॥

नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वर्णितम् ।
नन्दापुराणं तल्लोके नन्दाख्यमिति कीर्त्यते ॥
यत्तु साम्बं पुरस्कृत्य भविष्येऽपि कथानकम् ।
प्रोच्यते तत्पुनर्लोके साम्बमेव मुनिव्रताः ॥
एवमादित्यसंज्ञाच तत्रैव परिगद्यते ।
अष्टादशभ्यस्तु पृथक् पुराणं यत्तु दृश्यते ॥
विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ।

कथानकं कथा। विनिर्गतं समुद्धृतम्। यथा महाजनपरि हीतनन्दिकेश्वरपुराणादिपुराणदेवीपुराणादीति संक्षेपः ।

अथ धर्मशास्त्राणि ।

तत्र तत्प्रणेतॄनाह

याज्ञवल्क्यः,

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥

प्रयोजकाः कर्त्तारः।

पैठीनसिः,

तेषां मन्वङ्गिरोव्यासगौतमात्र्युशनोयमाः ।
वसिष्ठदक्षसंवर्त्तशातातपपराशराः ॥
विष्ण्वापस्तम्बहारीताः शङ्खः कात्यायनो भृगुः ।
प्रचेता नारदो योगी बौधायनपितामहौ ॥
सुमन्तुः कश्यपो बभ्रुः पैठीनो व्याघ्र एवच ।
सत्यव्रतो भरद्वाजो गार्ग्यः कार्ष्णाजिनिस्तथा ॥

जाबालिर्जमदग्निश्च लौगाक्षिर्ब्रह्मसंभवः ।
इति धर्मप्रणेतारः षट्त्रिंशदृषयस्तथा ॥
ब्रह्मसंभवो ब्रह्मगर्भः ।

शङ्खलिखितौ,

स्मृतिर्धर्मशास्त्राणि तेषां प्रणेतारो मनुविष्णुयमदक्षाङ्गिरोऽत्रिबृहस्पत्युशनआपस्तम्बवसिष्ठकात्यायनपराशरव्यासशङ्खलिखितसंवर्त्तगौतमशातातपहारीतयाज्ञवल्क्यप्राचेतआदयः । प्रचेता एव प्राचेतसः । आदिशब्देन कल्पतरौ बुधदेवलसोमजमदग्निविश्वामित्रप्रजापतिनारदपैठीनसिपितामहबौधायनच्छागलेयजाबालच्यवनमरीचिकश्यपा उक्ताः । एवंच

मन्वादिस्मृतयो यास्तु षट्त्रिंशत्परिकीर्त्तिताः ।

इत्यत्र एताः षट्त्रिंशद्बोध्याः । अविगानेन सर्वपरिग्रहादिति कल्पतरुः । योगियाज्ञवल्क्यवृद्धमनुवृद्धशातातपवृद्धवसिष्ठलघुहारीतस्मरणानि षट्त्रिंशत्स्मृतिकारकर्तृकाण्येव अवस्थाभेदेन तैरेव करणात् । अत एव याज्ञवल्क्येनोक्तं योगशास्त्रं च मत्प्रोक्तमिति ।

योगियाज्ञवल्क्यग्रन्थे,

स्नानमब्दैवतैर्मन्त्रैर्यत्त्वयोक्तं पुराऽनघ ।

इति योगियाज्ञवल्क्यं प्रति ऋषिप्रश्ने याज्ञवल्क्यग्रन्थोक्तस्नानानुवादाच्च । एवं वृद्धमन्वादीनामपि मन्वाद्यभेदः शिष्टप्रसिद्ध्यादिभिरवगन्तव्यः । यानि तु गृह्यतत्परिशिष्टादीनि तानि भिन्नकोटीन्येव पुराणवत्प्रमाणानि । तथा विष्णुधर्मोत्तरमहाभारतरामायणादीन्यपि ।

अष्टादशपुराणेषु यानि वाक्यानि भारत ।

तान्यालोच्य महाबाहो तथा स्मृत्यन्तरेषु च ॥
मन्वादिस्मृतयो याश्च षट्त्रिंशत्परिकीर्तिताः ।
तासां वाक्यानि क्रमशः समालोच्य ब्रवीमि ते ॥
इति भविष्यपुराणे षट्त्रिंशत्स्मृतिभिन्नस्मृत्यन्तराभिधानात्।
अष्टादशपुराणानि रामस्य चरितं तथा ।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥
कार्ष्णं च पञ्चमं वेदं यन्महाभारतं स्मृतम् ।
सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते ॥
जयेति नाम एतेषां प्रवदन्ति मनीषिणः ।
इति विशिष्य रामचरितादेस्तत्रैवाभिधानाच्च ।

कार्ष्णं कृष्णेन व्यासेन प्रणीतम् । अत्र जयति सर्वोत्कर्षेण वर्त्तते इति व्युत्पत्त्या धर्मप्रमाणत्वं लभ्यते । शब्दे प्रमाणत्वरूपोत्कर्षस्यैवौचित्यात् । स्पष्टं चेदं,

श्राद्धशूलपाणौ भविष्यपुराणे ।
चतुर्णामपि वर्णानां यानि प्रोक्तानि श्रेयसे ।
धर्मशास्त्राणि राजेन्द्र शृणु तानि नृपोत्तम ॥
अष्टादशपुराणानि चरितं राघवस्य च ।
रामस्य कुरुशार्दूल धर्मकामार्थसिद्धये ॥
तथोक्तं भारतं वीर पाराशर्येण धीमता ।
वेदार्थं सकलं योज्य धर्मशास्त्राणि च प्रभो ॥ इति ।

यद्यपि स्मर्तृनाम अनिर्दिश्य अत्र स्मृतिरत्र श्लोकः इत्यादि प्रामाणिकलिखनं तदप्यविगीतमहाजनपरिगृहीतत्वेन प्रमाणं स्मृत्यन्तरेषु प्रवेशनेनैव संगृहीतं वेदितव्यम् । षट्त्रिंशन्मतादिकं तु कैश्चिदेव परिगृहीतत्वाद्विगीतत्वादप्रमाणमित्युक्तं कल्पतरुणा ।

विज्ञानेश्वरापरार्कशूलपाणिप्रभृतिभिस्तु प्रमाणत्वेन परिगृहीतम् । युक्तं चैतत् । यतः अन्येऽपि स्मृतिकर्त्तारः प्रयोगपारिजातादौ गण्यन्ते । यथा

प्रयोगपारिजाते,

मनुर्बृहस्पतिर्दक्षो गौतमोऽथ यमोऽङ्गिराः ।
योगीश्वरः प्रचेताश्च शातातपपराशरौ ॥
संवर्त्तोशनसौ शङ्खलिखितावत्रिरेव च ।
विष्ण्वापस्तम्बहारीता धर्मशास्त्रप्रवर्तकाः ॥
एते ह्यष्टादश प्रोक्ता मुनयो नियतव्रताः ।
जाबालिर्नाचिकेतश्च स्कन्दो लौगाक्षिकाश्यपौ ॥
व्यासः सनत्कुमारश्च शन्तनुर्जनकस्तथा ।
व्याघ्रः कात्यायनश्चैव जातूकर्ण्यः कापिञ्जलः ॥
बौधायनश्च काणादो विश्वामित्रस्तथैव च ।
पैठीनसिर्गोभिलश्चेत्युपस्मृतिविधायकाः ॥
वसिष्ठो नारदश्चैव सुमन्तुश्च पितामहः ।
विष्णुः कार्ष्णाजिनिः सत्यव्रतो गार्ग्यश्च देवलः ।
जमदग्निर्भरद्वाजः पुलस्त्यः पुलहः क्रतुः ॥
आत्रेयश्च गवेयश्च मरीचिर्वत्स एवच ।
पारस्करश्चर्ष्यशृङ्गो वैजावापस्तथैवच ॥
इत्येते स्मृतिकर्त्तार एकविंशतिरीरिताः ।
एतैर्यानि प्रणीतानि धर्मशास्त्राणि वै पुरा ॥ इति ।

एते एवोपस्मृतिकर्तारो मदनरत्नेऽप्युक्ताः ।

इति स्मृतयः ।

इयं च स्मृतिः पञ्चविधा । तथाच

भविष्यपुराणे,

दृष्टार्था तु स्मृतिः का चिददृष्टार्था तथाऽपरा
दृष्टादृष्टार्थरूपाऽन्या न्यायमूला तथाऽपरा ॥
अनुवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी ।
सर्वा एता वेदमूला दृष्टार्थाः परिहृत्य तु ॥
एतासां लक्षणानि

तत्रैव,

षड्गुणस्य प्रयोज्यस्य प्रयोगः कार्यगौरवात् ।
सामादीनामुपायानां योगो व्याससमासतः ॥
अध्यक्षाणां च निक्षेपः कण्टकानां निरूपणम् ।
दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुडात्मज ॥
संध्योपास्तिः सदा कार्या शुनो मांसं न भक्षयेत् ।
अदृष्टार्था स्मृतिः प्रोक्ता ऋषिभिर्ज्ञानकोविदैः ॥
पालाशं धारयेद्दण्डमुभयार्थां विदुर्बुधाः ।
विरोधे तु विकल्पः स्याज्जपहोमश्रुतौ यथा ॥
श्रुतौ दृष्टं यथा कार्यं स्मृतौ तच्चादृशं यदि ।
अनूक्तवादिनी सा तु पारिव्राज्यं यथा गृहात् ॥ इति ।

षड् गुणाः संधिविग्रहादयो वक्ष्यन्ते । प्रयोगः कार्यगौरवात् षड्गुणस्यैव व्याससमासाभ्यां कर्त्तव्यः । सामादीनामपि कार्यगौरवाद्व्याससमासाभ्यां योगः प्रयोगः कर्त्तव्य इत्यर्थः । जपहोमश्रुताविति । सूर्योदयावधि सावित्रीजपोऽनुदितहोमविधयो यथा । अनूक्तवादिनी अनूदितवादिनी । यथा यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वेत्यनयाऽनूदितं, ब्राह्मणः प्रव्रजेद् गृहादिति मनुस्मृतिर्वदति । विधत्त इत्यर्थः ।

अथाङ्गानि ।

तत्र

देवलः,

शिक्षाव्याकरणनिरुक्तच्छन्दःकल्पज्योतिषाणीति । तत्र शिक्षा अथ शिक्षां प्रवक्ष्यामीत्यादिपञ्चखण्डात्मिका पाणिनिप्रोक्ता, प्रतिशाखं चान्याऽन्या तत्तन्मुनिप्रणीता प्रातिशाख्याभिधा च । व्याकरणं वृद्धिरादैच् इत्यादि पाणिनिप्रोक्तं कात्यायनोक्तं वार्त्तिकं पतञ्जल्युक्तं महाभाष्यं चेति त्रिमुनि । इदमेव वेदाङ्गम् । कौमारादीनि तु लौकिकशब्दमात्रसाधुत्वान्वाख्यानपराणीति सांप्रदायिकाः । निरुक्तं समाम्नायः समाम्नातः सव्याख्यातव्य इत्यादि यास्कप्रणीतम् । निघण्टुस्तु गौः ग्मेत्यादिः तदन्तर्गत एव । छन्दो धी श्री स्त्रीमित्यादिश्छन्दोविचितिपर्यायो ग्रन्थः पिङ्गलप्रोक्तः । कल्पो बौधायनादिसूत्राणि । ज्योतिषमादित्यगर्गादिप्रोक्तं पञ्चसंवत्सरमयमित्यादि । एतैर्मिश्रिताः वेदा ऋग्यजुःसामाथर्वाणो वेदा इति देवलोक्ताः । स्थानानि विद्यानामित्यादि व्याख्यातम् । ननु सांख्ययोगपञ्चरात्रपाशुपताद्यागमाः किं धर्मे प्रमाणमुत न । आद्ये धर्मस्य च चतुर्दशेतिसंख्याव्याकोपः । द्वितीयेऽविगीतमहाजनपरिग्रहविरोधः । उच्यते । तेऽपि वेदाविरुद्धाः प्रमाणमेव । तथाच

योगियाज्ञवल्क्यः,

न वेदशास्त्रादन्यत्तु किंचिच्छास्त्रं हि विद्यते ।
निःसृतं सर्वशास्त्रं तु वेदशास्त्रात्सनातनात् ॥
दुर्बोध्यं तु भवेद्यस्मादध्येतुं नैव शक्यते ।
तस्मादुद्धृत्य सर्वं हि शास्त्रं तु ऋषिभिः कृतम् ॥
पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा।
अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत्॥

इति।

अत्र सांख्यं योगः पञ्चरात्रमित्युपक्रम्य हेतुभिर्न विरोधयेदित्युक्तेस्तेषामदूष्यत्वमात्रे तात्पर्यं न तु प्रामाण्यम् इत्यपराक्तमनादरणीयम्, अतिप्रमाणानीत्यभिधानात्। तथा

महाभारते,

पञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः।
प्रापणं भगवत्प्रोक्तं भुञ्जते चात्र भोजनम्॥
तस्य प्रशासतो राज्यं धर्मेणामित्रघातिनः।
नानृता वाक्समभवत् मनो दुष्टं न चाभवत्॥

इति उपरिचरराजप्रशंसामुखेन पञ्चरात्रस्य प्राशस्त्यमुक्तम्। प्रापणं नैवेद्यम्। तथा,

सांख्यस्य वक्ता कपिलः परमर्षिः स उच्यते।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः॥
अपान्तरतमाश्चैव वेदाचार्यः स उच्यते।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन॥
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः॥
पञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान् स्वयम्।

बृहत्पराशरोऽपि,

वैदिकं तु जपं कुर्यात्पौराणं पाञ्चरात्रिकम्।
यो वेदस्तानि चैतानि यान्येतानि च सा श्रुतिः॥
पञ्चरात्रविधानेन स्थण्डिले वाऽथ पूजयेत्। इति

विष्णुधर्मोत्तरेऽपि,

सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा।
कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे ॥

कृतान्तः सिद्धान्तः।

कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु।

इति त्रिकाण्डीस्मरणात्। किञ्च। पाशुपतागमानां तावद्वैदिकावैदिकभेदेन द्वैविध्यमवश्यं वाच्यम्।

निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभम्।
गुह्याद् गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ॥

इत्यारभ्य

एष पाशुपतो योगः सेवनीयो मुमुक्षुभिः।
भस्मच्छन्नैर्हि सततं निष्कामैरिति हि श्रुतिः ॥

इति वेदसारमयत्वमेकस्याभिधाय

अन्यानि चैव शास्त्राणि लोकेऽस्मिन्मोहनानि वै।
वेदवादविरुद्धानि मयैव कथितानि तु ॥
वामं पाशुपतं सोमं लाङ्गलं चैव भैरवम्।
न सेव्यमेतत्कथितं वेदबाह्यं तथेतरत् ॥

इति वेदविरुद्धस्यान्यस्य कौर्मेऽभिधानात्।

वायुसंहितायां तु,

शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च संस्मृतः।
श्रुतिसारमयः श्रौतः स्वतन्त्र इतरो मतः ॥

स्वतन्त्रो दशधा पूर्वमित्यारभ्य

श्रुतिसारमयोऽन्यस्तु शतकोटिप्रविस्तरः।

परं पाशुपतं यत्र व्रतं ज्ञानं च कथ्यते ॥

इत्यन्तेन श्रौताश्रौतविभागः स्पष्टीकृतः । अत्र शैवागमोऽपि द्विविध इत्यपिना स्वसमानयोगक्षेमवैष्णवपञ्चरात्राद्यागमानामपि श्रौताश्रौतभेदेन द्वैविध्यमुक्तं भवति । उक्तं च पञ्चरात्रादेर्वैदिकत्वं

हेमाद्रौ विष्णुधर्मोत्तरे,

सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।
कृतान्तपञ्चकं विद्धि ब्रह्मणः परिमार्गणे ॥
संसारक्षपणे स्वर्गभावोपकरणेषु च ।
सेतुरावैष्णवाद्धर्मात्सारमेतत्प्रकीर्तितम् ॥
एतावानेव सकलो वेदमार्गस्त्वदीरितः । इति ।
भोत्र ऐश्वर्यम् । सेतुर्मार्गः : एवंच

कौर्मे,

कापालं पञ्चरात्रं च यामलं वाममार्हतम् ।
एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥

इति पञ्चरात्रस्य यन्मोहकत्वाभिधानं तदवैदिकपञ्चरात्रपरम् ।

यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि तु ।
श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी ॥

इति तत्रैव वेदविरुद्धानामेवोपक्रमे श्रवणात् । विरोधे त्वनपेक्षं स्यादिति मीमांसाधिकरणं च यान्येतानि त्रयीविद्भिर्न परिगृहीतानीत्यादिग्रन्थदर्शनादवैदिकागमविषयत्वेनाप्युपपत्तेर्नावश्यमागममात्रस्याप्रामाण्यमापादयति । कथं तर्हि धर्मस्य च चतुर्दशोत्ते संख्यानिर्देश उपपद्यते । उपलक्षणमात्रतयेति ब्रूमः ।

अन्यथा रामायणशिष्टाचारादीनामप्यनुपसंग्रहादप्रामाण्यापत्तेः॥ यदि तु तथा स्मृत्यन्तरेषु चेति पूर्वोदाहृतभविष्यत्पुराणवचनेन तदुपसंग्रहः तदा स प्रकृतेऽपि तुल्यः । यत्तु

साम्बपुराणे,

श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयं गतः ।
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ॥ इति,

यच्च कौर्मे,

अथांशुः सात्वतो नाम विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदां वरः ॥
स नारदस्य वचनाद्वासुदेवार्चने रतः ।
शास्त्रं प्रवर्त्तयामास कुण्डगोलादिभिः श्रितम् ॥
तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् ।
प्रवर्त्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥ इति,

श्रीभागवतेऽपि,

तेनोक्तं सात्वतं तन्त्रं यद् ज्ञात्वा मुक्तिभाग्भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवः स्मृतः ॥

इत्यादिवचनैः श्रुतिभ्रष्टादीनामेवागमेष्वधिकारप्रतिपादनाद्वेदविदामनधिकार इति कैश्चिदुक्तं, तन्न न्यायविदामभिधानम् । तथाहि । श्रुतिभ्रष्टादिवाक्येषु न तन्त्रमुद्दिश्य कर्त्तारो विधीयन्ते राजसूयोद्देशेन राजेव येनान्येषामनधिकारः स्यात्, किं तु श्रुतिभ्रष्टादीनुद्दिश्य तन्त्रं विधीयते । तथाच

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
अतो भारतमाख्यानमिति वचनात् स्त्रीशूद्रादीन्प्रति भार-

तमप्रवृत्तावपि अन्येषां भारताधिकारवदागमेष्वप्यविरुद्धेष्वविहतोऽधिकारः।

इति प्रमाणनिरूपणम्।

अथैतेषां विरोधे बलाबलम्। तत्र श्रुत्योर्विरोधेऽगृह्यमाणविशेषत्वात् द्वयोरपि तुल्यबलत्वम् अनुष्ठाने परं विकल्पः। यथा षोडशिग्रहणाग्रहणादौ। एवं स्मृत्योराचारयोरपि विरोधे द्रष्टव्यं तुल्यन्यायत्वात्। श्रुतिस्मृत्योर्विरोधे तु श्रुतिर्बलीयसी निरपेक्षत्वात्। स्मृतेस्तु मूलभूतवेदानुमानसापेक्षत्वेन विलम्बितत्वाद् दुर्बलत्वम्। यथौदुम्बरीं स्पृष्ट्वोद्गायेदौदुम्बरी सर्वा वेष्टयितव्येति। स्मृत्याचारयोर्विरोधे स्मृतिर्बलीयसी। स्मृतेः साक्षाच्छ्रुत्यनुमापकत्वात्। आचारस्तु स्मृतिद्वारा तदनुमापकत्वात् दुर्बलः। यथा सूर्याविदे वधूवस्त्रं दद्यादिति स्मृत्या चतुर्थेऽह्नि वधूवस्त्रपरिधानाद्याचारो विरुद्धः। सूर्याः तद्देवत्या ऋचः। तथा मातुलकन्यापरिणयनम्, मातुलस्य सुतामूढ्वेतिस्मृतिविरुद्धम्।

श्रुत्यादीनां विशेषग्रहणे बाध्यबाधकभाव उच्यते। तथाहि। संदिग्धमसन्दिग्धेन बाध्यते। यथाऽक्ताः शर्करा इति तेजो वै घृतमित्यनेन। दुर्बलाश्रयं बलवदाश्रयेण। यथा वेदं कृत्वा वेदिं कुर्यादिति दुर्बलक्रमाश्रयं बलवत्पदार्थाश्रयेण क्षुतादिनिमित्ताचमनवाक्येन। उपसंहारस्थमुपक्रमस्थेन। यथोच्चैर्ऋचा क्रियते इत्युपसंहारस्थमृक्पदं त्रयो वेदा अजायन्तेत्युपक्रमस्थवेदपदेन। बहुबाधोऽल्पबाधेन। यथा यावतोऽश्वान्प्रतिगृह्णीयादित्यत्र प्रतिग्रहीतुरिष्टिश्चेत्प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्च्छेदिति वाक्ये वरुणायेति चतुर्थी पञ्चम्यर्थे नयतिर्ग्रहणार्थो देवतापदं चाविवक्षितार्थमिति बहुबाधो, दातुरिष्टौ गृह्यातिरेको दानलक्षणार्थ इत्यल्पबाधेन बाध्यते। वेदान्तरोत्पन्नं वेदान्तर-

विहितेन । यथा सामवेदोत्पन्नं वारवन्तीयाश्रयमुच्चैस्त्वमुपांशु यजुषेति विनियोजकयजुर्वेदस्वरेणोपांशुत्वेन । परशाखाविहितमग्नीषोमीयादेर्द्वादशकपालत्वादि स्वशाखाविहितेनैकादशकपालत्वादिना । नित्यं पञ्चदश सामिधेनीरनुब्रूयादिति पाञ्चदश्यं नैमित्तिकेन सप्तदश वैश्यस्येति साप्तदश्येन । द्विविधमप्येतत्क्रत्वर्थं चेत्पुरुषार्थेनैकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्येत्यादैकविंशतित्वादिना । अनारभ्याधीतं सप्तदश सामिधेनीरनुब्रूयादिति साप्तदश्यं प्राकरणिकेन पाञ्चदश्येन । यद्युद्गाताऽपच्छिन्द्याददक्षिणेन यजेत यदि प्रतिहर्त्ता सर्वस्वदक्षिणेनेत्यदाक्षिण्यसर्वस्वदाक्षिण्ययोर्निमित्तक्रमेण पौर्वापर्यप्राप्तौ परेण पूर्वस्य बाधः । कुशमयं बर्हिर्भवतीत्यतिदेशप्राप्तं शरमयं बर्हिर्भवतीति वैकृतेन । औद्गात्रसमाख्याते श्येने अतिदेशप्राप्तेषु प्राकृतेष्वङ्गेषु प्रयोगवचनात्प्राप्तमुद्गातृमात्रकर्तृकत्वं चोदकाश्रयेण नानर्त्विककर्तृकत्वेन । ब्राह्मणक्रमावगतमाग्नेयस्याग्नीषोमीयोत्तरत्वं मन्त्रक्रमावगतेनाग्नीषोमीयात्पूर्वत्वेन बाध्यते । आहवनीये जुहोतीति होमसामान्ये विहित आहवनीयः पदे जुहोतीतिहोमविशेषविहितेन पदेन । यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति यत्किंचिदिति सर्वनाम्ना सावकाशेन दीक्षणीयादावपि प्रथितमुपांशुत्वं यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयादिति निरवकाशेन दीक्षणीयामात्रे विहितेनोच्चैस्त्वेनेति । एवं स्मृतिष्वपि । नात्मानं घातयेत्प्राज्ञ इत्याद्याप्तमन्वादिस्मृत्या केदारे पातयेद्देहमित्याद्यनाप्तपाखण्डस्मृतिर्बाध्यते । तथा भार्याश्चतस्रो विप्रस्येत्याप्तस्मृतिरपि,

यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।

न तन्मम मतमिति याज्ञवल्क्याद्यविगीतस्मृतिभिर्विगीता ।

तथा न जातु ब्राह्मणं हन्यादित्यदृष्टार्थया जिघांसन्तं जिघांसी-यादित्याद्यात्मरक्षणादिदृष्टार्था । तथा पुत्रं प्रतिग्रहीष्यन्बन्धूना-हूय राज्ञे निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा प्रतिगृह्णी-यादिति होमादीतिकर्तव्यताविषयत्वाच्छ्रुतिप्रभवया न शेषो अग्ने अन्यजातमस्तीत्यादेः, शेषोऽपत्यनाम अपत्यमन्योत्पादितं नास्ती-त्याद्यभिधायित्वेन दत्तपुत्रनिषेधलिङ्गत्वात्तत्प्रभवा

बीजिनो यस्य ये जातास्तस्य ते नेतरस्य तु ।

इत्याद्या । तथा तद्यथैवादो मनुष्यराजआगतेऽन्यस्मिन् वाऽर्हत्युक्षाणं वा वेहतं वा क्षदन्ते इति मन्थनार्थवादप्रभवा

महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत् ।

इत्याद्या, मा गामनागामदितिं वधिष्टेतिविधिश्रुतिप्रभवया

गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ।

न निन्दाताडने कुर्यादित्याद्यया ।

एवमाचारेष्वपि । अभियुक्ततराणामार्याणां पीत्वादिश-ब्दस्य वृक्षविशेषे प्रयोगाचारेण म्लेच्छानां हस्त्यादौ प्रयोगा-चारो बाध्यते । आचारात्मतुष्टिसम्यक्संकल्पजकामानां पूर्वपू-र्ववलीयस्त्वमिति मिताक्षरायाम् । क्वचित् दुर्बलेनापि बलवतो बाधः । यथा सौत्रामण्यां सुराग्रहान् गृह्णातीति प्रत्यक्षश्रुतेरपि

कलौ युगे त्विमान् धर्मान्वर्ज्यानाहुर्मनीषिणः ।

इति स्मृत्या । अन्यथाऽऽनर्थक्यापत्तेः । मनुविरुद्धा स्मृति-रप्रमाणमित्याह

बृहस्पतिः,

वेदार्थोपनिबन्धत्वात्प्राधान्यं हि मनोः स्मृतम् ।
मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते ॥

इति ।

कल्पतरुरप्येवम् ।

गौतमः, देशजातिकुलधर्मा आम्नायैरविरुद्धाः प्रमाणम् । आम्नायैर्वेदस्मृतिपुराणैः । देशाद्याचाराणां बलवत्प्रमाणविरुद्धानामपि

आनर्थक्यप्रतिहतानां विपरीतं बलाबलम् ।

इति न्यायेन बलवत्त्वे प्राप्ते इदमुच्यते । एते देशादिधर्मा आम्नायविरुद्धा नैव प्रमाणं किंतु प्रमाणाभासा वामागमवद् इत्यर्थः । स्मृतिरित्यनुवृत्तौ

भविष्यपुराणे,

श्रुत्या सह विरोधे तु बाध्यते विषयं विना ।
व्यवस्थया ऽविरोधेन कार्योऽन्यत्र परीक्षकैः ॥

विषयं विना कुत्रापि विषयेऽवकाशमन्तरेण यतः स्मृतिर्बाध्यते बाधितार्थिका भवति अतस्तस्या अविरोधेन व्यवस्थया-ऽविरोधेन व्यवस्थायै अन्यत्र विरुद्धश्रुत्यदर्शनकालादौ विषयः कार्यो बाधितार्थकत्वं कल्पनीयमिति कल्पतरुस्वरसः । व्यवस्थयेति चतुर्थ्यर्थे तृतीया ।

शबरानुसारिणस्तु विषयं विना विषयबाधाद्विरुद्धा स्मृतिर्बाध्यते एव । यत्र तु विषयान्तरकल्पनं संभवति तत्राह व्यवस्थयेत्यादीत्याहुः । भाट्टास्तु विरुद्धा स्मृतिर्विषयं विना श्रुतिमूलकत्वसन्देहेन प्रामाण्यसंदेहाद्विषयनिश्चयं विना बाध्यते तत्प्रतिपाद्यार्थानुष्ठानं बाध्यते इत्यर्थमाहुः ।

तत्राद्ये पक्षे बाधितार्थस्मृतिकर्तुः भ्रमप्रमादादिदोषकल्पनाद्विरुद्धस्मृत्याचारेष्वप्यनाश्वासप्रसङ्गः । द्वितीये तु स्मृतेः प्रमाणत्वात्तन्मूलभूतश्रुतेः क्वचित्कदाचित्केनापि पुरुषेणानुपलम्भस्य निष्प्रमाणत्वादनुपसंहरणीयार्थश्रुतिद्वयस्य च ग्रहणाग्रह-

णवत्संभवात् किंनिमित्तमननुष्ठानम् । नच श्रुतिविरुद्धा स्मृतिः किम् "अङ्गं वा समभिव्याहारा"दितित्वन्न्यायाभासमूलोताष्ट-कादिस्मृतिवच्छ्रुतिमूलत्वप्रामाण्यसंशयात्तदिति वाच्यम् । अविरुद्धस्मृतिष्वपि तस्यानिवार्यत्वादिति ।

अत्र वदन्ति ।

अतः स परमो धर्मो यो वेदादवगम्यते ।
अवरः स तु विज्ञेयो यः पुराणादिषु स्मृतः ॥

इति व्यासवचनाद्वेदस्मृत्यवबोधितयोर्धर्मयोरुत्कर्षापकर्षा-ववगम्येते । तथाच वैदिको धर्मो मुख्य उत्कृष्टत्वात् । स्मार्त्तोऽनु-कल्पः अपकृष्टत्वात् । मुख्यासंभवे चानुकल्पानुष्ठानात्फलं भवति न तत्संभवे ।

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते ।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥

इति मनूक्तेः । तथाच श्रुतिविरुद्धार्थाननुष्ठाने फलाभाव एव वीजं न तु अप्रामाण्यसंदेहादि । अविरोधे तु स्मृत्यर्थानु-ष्ठानादेव फलं तस्या अपि धर्मे प्रमाणत्वात् इति सर्वं सुस्थम् । अथ स्वरूपतो धर्माधर्मनिरूपणम् ।

तत्रात्मगुणौ धर्माधर्माविति नैयायिकाः ।

तदुक्तं,

विहितक्रियया साध्यो धर्मः पुंसो गुणो मतः ।
प्रतिषिद्धक्रियासाध्यः पुंगुणोऽधर्म उच्यते ॥ इति ।

विहितक्रिया ज्योतिष्टोमादिः । प्रतिषिद्धक्रिया सुरापा-नादिः । पुमानात्मा । भाट्टास्तु द्रव्यगुणक्रियादिकमेव श्रेयःसा-धनत्वेन रूपेण धर्ममाहुः ।

आपस्तम्बोऽपि,

न धर्माधर्मौ चरत आवां स्व इति, न देवा न गन्धर्वा न पितर इत्याचक्षतेऽयं धर्मो ऽयमधर्म इति, यं त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः यं विगर्हन्ति सोऽधर्मः । आत्मकथनाय सर्वलोकमसक्षं धर्माधर्मावावां वर्तावहे इति ब्रुवाणौ न भ्रमतः । नापि देवादयोऽयं धर्मोऽयमधर्म इत्याचक्षते । शेषं सुगमम् ।

भविष्यपुराणेऽपि,

धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम् ।

श्रेयः साधनम् । मुख्यं श्रेयस्त्वभ्युदयरूपम् । तथाच तत्साधनं धर्म इत्यर्थः । धर्मो द्विविधः साधारणोऽसाधारणश्च । आद्यमाह

बृहस्पतिः,

दया क्षमाऽनसूया च शौचानायासमङ्गलम् ।
अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ॥

विष्णुः,

क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥
आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥

सामान्यः सर्वेषां साधारणः ।

महाभारते,

सत्यं दमस्तपः शौचं संतोषो ह्रीः क्षमाऽऽर्जवम् ।
ज्ञानं शमो दया ध्यानमेवं धर्मः सनातनः ॥

सनातनः कालमात्राधिकारको न ब्राह्मणत्वाद्यधिकारान्तरापेक्ष इत्यर्थः ।

तथा,

आनृशंस्यमहिंसा चाप्रमादः संविभागिता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एवच ॥
स्वेषु दारेषु सन्तोषः शौचं नित्यानसूयता ।
आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप ॥

आनृशंस्यमक्रूरत्वम् । संविभागिता भोग्यस्यान्नादेर्यथार्हं विभज्य प्रतिपादनम् । आत्मज्ञानं शरीरादिभिन्नत्वेनात्मविवेकः । तितिक्षा क्षमा ।

देवलः,

शौचं दानं तपः श्रद्धा गुरुसेवा क्षमा दया ।
विज्ञानं विनयः सत्यमिति धर्मसमुच्चयः ॥

दयादीनां स्वरूपमाह

दाने बृहस्पतिः,

परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आपन्ने रक्षितव्यं तु दयैषा परिकीर्त्तिता ॥
बाह्ये चाध्यात्मिके चैव दुःखे चौत्पातिके क्वचित् ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥
न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ॥
अधर्मपरिहारश्च संसर्गश्चाप्यनिन्दितैः ।
स्वधर्मे च व्यवस्थानं शौचमेतत् प्रकीर्तितम् ॥
शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते ॥
प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।
एतद्धि मङ्गलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥

तथाच तर्कपादे,

द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते।
तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता॥
श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः॥ इति।

द्रव्यं गोदोहनादि, क्रिया यागादिः, गुण आरुण्यादिः। आदिशब्दाज्जातिर्ब्राह्मणत्वादिः। तत्र परमेश्वरनामोच्चारणादावव्यवहितोत्तरक्षणे पापक्षयजनकत्वादपूर्वाजनके तादृशे एवच कर्मनाशाजलस्पर्शादौ पुण्यक्षयजनके आपामरं धर्माधर्मव्यवहारदर्शनाद्गुरुमतमेव साधीय इति प्रतीमः। अत एव "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्" तथा "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति" श्रुतौ "इष्टापूर्त्तौ स्मृतौ धर्मा, विति स्मृतौ यज्ञादिषु धर्मपदप्रयोगः साधु संगच्छते। यस्तु "धर्मः क्षरति कीर्त्तनात्, 'पुण्यदः पुण्यमाप्नोति पापदः पापमाप्नोती, त्यादौ अपूर्वे धर्मपदप्रयोगः स उदाहृतलौकिकवैदिकव्यवहारानुरोधेन क्रियादावेव शक्तौ निर्णीतायां लाक्षणिकः। अस्तु वोभयत्रापि शक्तिस्तथाऽपि विहितप्रतिषिद्धावेव धर्माधर्मावस्माभिर्निरूप्येते। तत्र को धर्म इति जिज्ञासायां तल्लक्षणमाह

मनुः,

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत॥ इति।

अत्र यो धर्म इति धर्मसामान्यमुद्दिश्य विद्वद्भिरित्यादिना लक्षणं विधीयते। विद्वद्भिर्वेदार्थविद्भिः। सद्भिः प्रमातृभिः। अनेन विशेषणद्वयेन वेदप्रमापितत्वं लक्ष्यते। अद्वेषरागिभिः निषिद्धफलकरागद्वेषशून्यैः। अनेन बलवदनिष्टाप्रयोजकत्वं लक्ष्यते।

हृदयेनाभ्यनुज्ञात इत्यनेन श्रेयःसाधनत्वम्। तत्रैव हि मनोऽभिमुखं भवति। तदयमर्थः बलवदनिष्टाप्रयोजकत्वे सति श्रेयःसाधनतया वेदप्रमापितत्वं तत्त्वमिति।

श्येनस्वर्गभोजनव्यावृत्त्यर्थं विशेषणत्रयम्। कादाचित्कदुर्वृत्तपुत्रजनकपुत्रेष्ट्यादिसंग्रहार्थं च बलवदनिष्टं निर्धारणेन विशेषणीयम्। श्येनस्तु न धर्मः। अवधारितबलवदनिष्टप्रयोजकत्वात्। यदि तु पुत्रेष्ट्यादेः फलस्य पुत्रस्य कूटसाक्ष्यकारित्वं ज्योतिःशास्त्रादितोऽवधार्यते तदा पुत्रेष्टिरप्यधर्म एव। निर्धारितगवादिपतनसंकीर्णमार्गस्थकूपखननमिव। अथवेष्टतावच्छेदकस्य बलवदनिष्टजनकतानवच्छेदकत्वं वाच्यम्। पुत्रत्वं तु तथा अभिचारत्वं तु न तथेति तद्व्यावृत्तिः। तथाच जैमिनिः,'चोदनालक्षणोऽर्थो धर्म, इति धर्मलक्षणमाह। अर्थग्रहणं श्येनव्यावृत्त्यर्थमिति शबरादयः।

अनेनाधर्मलक्षणमपि सूचितम्। तच्च बलवदनिष्टानुबन्धित्वेन वेदप्रमापितत्वम्। तदप्युक्तं भाष्यकृता कोऽर्थो योऽभ्युदयाय कोऽनर्थो योऽनभ्युदयायेति। अथवा विधिविषयो धर्मः। रागतः प्राप्तत्वे सति प्रतिषेधविषयोऽधर्मः। श्येनस्तु विधिविषयत्वाद्धर्म एव। तत्फलं त्वभिचारो नाभिचरेदितिनिषेधविषयत्वादधर्मः। अत एव च श्येने शिष्टानां विगानम्। तदेतदाह

**विश्वामित्रः,**

यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः।<br>
स धर्मो यं विगर्हन्ति तमधर्म्मं प्रचक्षते॥

शंसन्ति विहितं मन्यन्ते। विगर्हन्ति प्रतिषिद्धं मन्यन्ते।

स्तोकादपिच दातव्यमदीनेनान्तरात्मना।
अहन्यहनि यत्किंचिदकार्पण्यं हि तद् स्मृतम्॥
यथोत्पन्नेन संतोषः कर्त्तव्यो ह्यर्थवस्तुना।
परस्याचिन्तयित्वाऽर्थं सा ऽस्पृहा परिकीर्तिता॥

सत्यादीनां स्वरूपमुक्तं

महाभारते,

सत्यं भूतहितं प्रोक्तं मनसा दमनं दमः।
तपः स्वधर्मवर्त्तित्वं शौचं संकरवर्ज्जनम्॥
संतोषो विषयत्यागो ह्रीरकार्यनिवर्त्तनम्।
क्षमा द्वंद्वसहिष्णुत्वमार्जवं समचित्तता॥
ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता।
दया भूतहितैषित्वं ध्यानं निर्विषयं मनः॥

भूतहितं प्राण्यनुकूलम्। प्रोक्तं यथार्थवचनम्। अप्राणि-पीडाकरं यथार्थवचनं सत्यमिति मिताक्षराऽपि। दमनं वशीक-रणम्। द्वंद्वं कलहः तस्मिन्सत्यपि सहिष्णुता। अपकारेऽपि चित्तस्याविकारः क्षमेति मिताक्षरा। प्रशान्तता विरक्तिः।

देवलः,

व्रतोपवासनियमैः शरीरोत्तापनं तपः।

तथा,

प्रत्ययो धर्मकार्येषु सदा श्रद्धेत्युदाहृता।
नास्ति ह्यश्रद्दधानस्य धर्मकृत्यप्रयोजनम्॥

देवीपुराणे,

कायक्लेशैर्न बहुभिर्नचैवार्थस्य राशिभिः।
धर्मः संप्राप्यते सूक्ष्मः श्रद्धाहीनैः सुरैरपि॥

देवलः,

विगर्हातिक्रमक्षेपहिंसाबन्धवधात्मना ।

अन्यमन्युसमुत्थाने दोषाणां मर्षणं क्षमा ॥

क्षेपो गलहस्तादिना प्रेरणम् । वधोऽत्र ताडनमात्रं, हिंसायाः पृथगुपादानात् । साऽपि शोणितोत्पादादिमात्रपरा, न प्राणवियोगपर्यन्ता । अन्यथा मर्षणासंभवात् ।

तथा,

स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदात् ।

दयेति मुनयः प्राहुरनुक्रोशं च जन्तुषु ॥

यत्पुनर्वैदिकीनां च लौकिकीनां च सर्वशः ।

धारणा सर्वविद्यानां विज्ञानमिति कीर्त्यते ॥

विनयं द्विविधं प्राहुः शश्वद्दमशमाविति ।

शरीरोपरतिः शान्तिर्ज्ञानं प्रज्ञाप्रसादजम् ॥

शरीरोपरतिः शरीरस्य वृथाचेष्टाराहित्यम् ।

देवलः,

श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।

आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

दक्षः,

यथैवात्मा परस्तद्वद् द्रष्टव्यः सुखमिच्छता ।

सुखदुःखानि तुल्यानि यथाऽऽत्मनि तथा परे ॥

अत्र सामान्यनिर्देशात्साधारणधर्मपरत्वं द्वयोर्वाक्ययोः प्रतीयते ।

याज्ञवल्क्यः,

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।

दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ॥

वयोबुद्धयर्थवाग्वेषश्रुताभिजनकर्मणाम्।
आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा ॥ इति।

एतदर्थः शूलपाणिकृतजाबालस्मृतौ स्पष्टः। शिशुः पांसुक्रीडाम्। युवा गन्धादिकम्। वृद्धो धर्मानुसरणम्। बुद्धिमान्महाभाष्यादिग्रहणम्। अर्थवान्दानम्। वाग्मी दूतम्। सुवेषो राजसन्निधिम्। श्रुतशास्त्रो वेदार्थनिर्वचनम्। विशुद्धाभिजनः कुलीनकन्यावरणम्। यागकर्मरतः पशुहिंसनम्। एवं वयःप्रभृतीनामुचितां चेष्टामाचरेत्। अजिह्मामकुटिलाम्। अशठां दम्भादिरहिताम्।

मनुः,
वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च।
वेषवाग्बुद्धिसारूप्यमाचरन् विचरेदिह ॥

बृहस्पतिः,
यथा विद्या यथा कर्म यथा वित्तं यथा वयः।
जानंस्तथैव वर्त्तेत वेषादिभिरनुद्धतः ॥

याज्ञवल्क्यः,
इज्याऽऽचारदमाहिंसादानस्वाध्यायकर्मणाम्।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥
योगो बाह्यविषयकचित्तवृत्तिनिरोधः। परमः देशकालजात्याद्यनपेक्षः सन्परमपुरुषार्थसाधनम्।

ननु नावेदविन्मनुते तं बृहन्तमिति श्रुत्या ऽवेदविदः आत्मसाक्षात्कारप्रतिषेधात्तं त्वौपनिषदं पुरुषं पृच्छामीत्यादिश्रुतिभिश्च वेदैकजन्यत्वविधानाद्वेदानधिकारिणां शूद्रादीनां कथमात्मसाक्षात्कार इति चेत्, पुराणश्रवणादिनेति ब्रूमः। अन्यथा पुराणादावात्मनिरूपणवैयर्थ्यापत्तेः। तथाच

भागवते,

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।

इति भारतमाख्यानं मुनिना कृपया कृतम् ॥ इति ।

अत्र त्रयीं प्रतिषिध्य तत्स्थाने भारतं विधीयते । स्थानापत्त्या च 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेय,मिसनेरापदस्य गिरापदकार्यकारित्ववत् वेदकार्यकारित्वावगमाद्भारतस्य वेदकार्यात्मज्ञानकारित्वसिद्धिः । किंच

श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः ।

इत्यत्र णिजर्थस्य रागतः प्राप्तत्वेनाविधेयत्वात् एतया निषादस्थपतिं याजयेदितिवत् प्रयोज्यव्यापार एव पुराणश्रवणं विधीयते । तस्य च प्रयोजनाकाङ्क्षायां श्रुतेन पुराणेन यच्छक्यते तत्कुर्यादित्युपबन्धादात्मप्रतिपादकपुराणश्रवणेनात्मज्ञानं भावयेदितिविधानात्सिध्यति शूद्रस्याप्यात्मज्ञानाधिकारः । नावेदविन्मनुते इति श्रुतिस्तु वेदाधिकारिणो [1]वेदातिरिक्तप्रमा-

---

१ वेदातिरिक्तेति । वेदाधिकारी वेदातिरिक्तप्रमाणेन आत्मज्ञानाय न यतेतेत्यर्थ । ननु तन्त्रप्रामाण्यनिरूपणावसरे श्रुतिभ्रष्टातिरिक्ताना वैदिकानामपि तन्त्रेऽधिकार प्रदर्शित , तथा शूद्राद्युद्देशेन रचितेष्वपि पुराणेषु त्रैवर्णिकानामधिकार प्रदर्शित । एवंच तत्त्वज्ञानायापि पुराणश्रवणादिकं त्रैवर्णिकाना नानुचितम् । किंच शूद्रादीना तत्त्वज्ञानसाधनस्य पुराणादिश्रवणस्य त्रैवर्णिकाना तत्त्वज्ञानसाधने क प्रतिबन्ध । विवेकवैराग्यसपादन द्वारा मुमुक्षुत्वोत्पादनस्य उभयत्र तुल्यत्वात् । अतो नावेदविन्मनुते त बृहन्तमिति श्रुते वेदाधिकारिणो वेदातिरिक्तप्रमाणनिषेधपरत्व न समञ्जसम् इत्यत आह ।

णनिषेधपरा [1]वेदविरुद्धतर्कादिनिषेधपरा वा व्याख्येया । तं त्वौपनिषदमित्येषाऽपि उपनिषदतिरिक्ततार्किकादिसंमतानुमा-

१ वेदविरुद्धेति । वेदविरुद्धतर्कादिभिः आत्मज्ञानाय कोटिजन्मपर्यन्तमपि यत्ने कृते वैफल्यमेव स्यात् अतो ज्ञानार्थिभिः वेद एव श्रद्धेयः तदनुकूला एव तर्का आश्रयणीयाः न विरुद्धा इति सुहृद्भूत्वा वेदः नावेदविदिति वक्तीति भावः ।

२ अनुमानादीति । आत्मस्वरूपस्य गुणातीतत्वेन अनुमानादिप्रमाणागोचरत्वात् तत्सिद्धात्मज्ञानेन न मोक्षसिद्धिरिति मुमुक्षुभिरुपनिषदेवाश्रयणीयेति बोधनार्थं तं त्वौपनिषदम् इति श्रुतिरिति भावः । उपनिषच्छब्दार्थश्च मुख्यया वृत्त्या ब्रह्मविद्यैव । मुमुक्षूणामविद्याविनाशकत्वात् ब्रह्मप्रापकत्वाद्वा । तत्साधनत्वाद् ग्रन्थोऽपि लक्षणया उपनिषद् । तं त्वौपनिषदमित्यत्र उपनिषच्छब्देन आत्मविद्यैव, आत्मस्वरूपस्यैव विद्यामात्रगम्यत्वात् । ज्ञानं ज्ञेयं ज्ञानगम्यमिति स्मृतेः । सा च गुरुगम्यैव । स गुरुमेवाभिगच्छेत् श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतेः ।

तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥

इति भागवताच्च । ब्रह्मनिष्ठगुरुश्च मुमुक्षुकम्य एव । अन्यश्च

इदं ते नातपस्काय नाभक्ताय कदाचन ।
नचाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥

इत्यनेन उपदेशनिषेधश्रवणात् । तपोऽत्र कामत्यागस्तपः स्मृतमितिनिर्वासनत्वमेव । तच्च वैराग्यमेव । विवेकं विनाच विषयेषु मिथ्यात्वमहादृढतरं तदनुपपन्नमेवेति विवेक आक्षिप्यते । तथाच विवेकज्ञानपूर्वकवैराग्यवान् तपस्वी तद्राहितश्च अतपस्कः । भक्तिश्च गुरुवेदान्तवाक्येषु श्रद्धापूर्विका चेतसः भगवत्प्रवणता । सा च शमादिपूर्विकैवेति शमादिषट्कस-

नादिमूलप्रमाणनिवृत्त्यर्था । नचाननुगतकारणजन्यत्वान्मोक्षे वैजात्यापत्तिरिति वाच्यम् । उभयविधस्यापि साक्षात्कारस्य साक्षात्कारत्वेनैकेनैव रूपेण मोक्षजनकत्वाङ्गीकारात् । स्पष्टं च पुराणेन शूद्रस्य तत्त्वज्ञानं

---

म्पत्तिरेव भक्ति तद्रहितश्च अभक्त । अभ्यसूया च अन्यत्र दोषदृष्टि । सा च स्थूलसूक्ष्मे अभिमानवतो भवति । स्थूलसूक्ष्मेऽभिमानवांश्च अन्यदेहादौ असूया करोति । सा च भगवत एव असूया भवति ।

मनसैतानि भूतानि प्रणमेद्बहु मानयन् ।
ईश्वरो जीवकलया प्रविष्टो भगवानिति ॥

विनाऽच्युताद्वस्तु तरां न वाच्यमित्यादौ सर्वस्य भगवद्रूपत्वश्रवणात् । तस्मात्स्थूलसूक्ष्मदेहयोरात्मबुद्धिं परित्यज्य सर्वत्र भगवद्बुद्धिं कुर्वत आत्मैकशरणस्यैव मुमुक्षुत्वम् । तादृशस्यैव मुमुक्षो जिज्ञासो सच्चिदानन्दविग्रहगुरुप्रसादात् प्रमाणागम्योऽप्यात्मा मुमुक्षुणा आत्मत्वेन गम्यते इति गुरुपुत्राणामतिरोहितम् । अत्र सद्गुरोर्महावाक्यवदनं मुमुक्षो शिष्यस्य श्रवणमात्मदर्शनं च आश्चर्यवदेव । स्पष्टं चेदम् आश्चर्यवत्पश्यति इति श्लोकव्याख्याने मधुसूदनटीकायाम् । अत्र अविद्यानिवर्त्तिका विद्याख्या उपनिषद् एकरूपा । सा च परवाग्रूपा । तत्साधनभूता वैखरीरूपा तु नानारूपा । तत्त्वमसि, प्रज्ञानमानन्दं ब्रह्म, अयमात्मा ब्रह्म, इति विधिरूपाणां नेति नेति इति निषेधरूपाणां च वाक्यानां श्रुतिषु दर्शनात् । सर्वेषामेव च सद्गुरुमुखाच्छ्रुतानामविद्यानिवर्त्तकविद्योत्पादकत्वम् । अविशेषात्पुराणादिवाक्यानामपि सद्गुरुमुखाच्छ्रुतानां विद्योत्पादकत्वे न विरोधः । तथा सत्यपि आत्मस्वरूपस्य परवाग्रूपोपनिषन्मात्रगम्यत्वस्य सुस्थत्वात् । प्रत्यक्रूपोपनिषद वैखरीरूपाया साक्षात् आत्मस्वरूपगमकत्वस्य असम्भवात् । स्पष्टं चेदमुपक्रमे एव कठवल्लीभाष्ये । परवाग्रूपोपनिषदि च वेदात् पुराणात् अन्यस्माद्वा कस्माच्चित् परोक्षेण आत्मानं देहादिभ्यो भिन्नत्वेन ज्ञातवतामैहिकामुष्मिकवि-

पुराणान्तरे,

अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम् ।
वदन्ति केचिन्मुनयः स्त्रीणां शूद्रसमानताम् ॥ इति ।

---

षयेषु अत्यन्तविरक्तानां बुद्धेः भगवन्निष्ठतया अहं ब्राह्मणः शूद्रः स्त्री चेति मूर्छिताभिमानानां मुमुक्षूणामधिकारः । अत एव मां हि पार्थ व्यपाश्रित्य, अपिचेत्सुदुराचार इति स्मर्यते । विवेकज्ञानं च वेदादिभ्य उत्पद्यते । तच्च द्विजैः अविशेषात् यस्मात्कस्माच्चित्संपादनीयम् । स्त्रीशूद्रैस्तु वेदानधिकारात् पुराणादिश्रवणादेव संपादनीयम् । विवेकज्ञानोत्तरं विरक्तानां स्त्रीशूद्राणां ज्ञानाभ्यासेऽधिकारित्वं सूतसंहितायां स्मर्यते । वक्ष्यते चाग्रे मूले एव,

अस्ति शूद्रस्य शुश्रूषोः पुराणेनैव वेदनम् ।
वदन्ति केचिन्मुनयः स्त्रीणां शूद्रसमानताम् ॥ इति ।

अत्रेदं तत्त्वम् । पञ्चमहाभूतारभ्यत्वं मनुष्याद्याकृतिमत्त्वं च यद्यपि ब्राह्मणादिदेहानां समानं तथापि संस्कारविशेषवत्त्वाद्यभिव्यङ्ग्यम् ब्राह्मणत्वादिकमधिकारविशेषप्रयोजकं भिन्नं भिन्नम् । प्रायः स्थूलदेहानुसारेणैव सूक्ष्मे संस्काराः प्रादुर्भवन्ति । अत एव पञ्चमहाभूतारभ्यत्वेन समानेष्वपि मनुष्यपशुपक्ष्यादिस्थूलदेहेषु प्रविष्टानां साभासानां सूक्ष्मदेहानां स्थूलानुरूपा एव संस्कारा दृश्यन्ते ननु विपरीताः । एवं प्रायो मनुष्येष्वपि ब्राह्मणत्वादिव्याप्यजातिमतां विजातीया एव वासना उपलभ्यन्ते । नहि लोहकारादीनां ब्राह्मणाद्यनुरूपाः ब्राह्मणादीनां वा लोहकाराद्यनुरूपा वासनाः उत्सर्गत उद्भवन्ति । तस्मात् जन्मान्तरानुष्ठितकर्मजन्यसंस्कारा एव साभासलिङ्गदेहस्य तत्तत्स्थूलप्राप्तौ नियामकाः । ततश्च मनुष्यदेहारम्भककर्मसंस्कारसत्त्वे एव मनुष्यदेहप्राप्तिः । एवं ब्राह्मणादिदेहारम्भककर्मसंस्कारसत्त्वे एव ब्राह्मणादिदेहप्राप्तिः । तथा पुरुषदेहारम्भककर्मसंस्कारसत्त्वे एव पुरुषदेहप्राप्तिः नान्यथा । अत्र क्वचित् वैपरीत्यदर्शनेऽपि न तावन्मात्रेण व्यभिचारः शङ्कनीयः । संस्कारविशेषान्तरस्य ब्राह्मणादिदेहाद्यनुरूपाकिंचित्-

स च साक्षात्कारो योगाभ्यासादिव काशीमरणादितोऽपि भवतीत्यन्यदेतत्। विस्तरस्तु मोक्षप्रकाशे वक्ष्यते। इति साधारणो धर्मः। अथासाधारणः। धर्म इत्यनुवृत्तौ

---

संस्कारोद्बोधप्रतिबन्धकत्वेन केषा चित्संस्काराणामनुद्बुद्धत्वेऽपि विपरीतानां च अन्यदेहानुरूपाणां केषाचित् संस्कारविशेषादेव उद्बुद्धत्वेऽपि औत्सर्गिकाणा केषाचित् ब्राह्मणादिदेहानुरूपाणा सत्त्वेन व्यभिचाराभावात्। नहि मण्यादिसमवधानदशाया वह्नेर्दाहानुत्पत्त्या उत्सर्गतः वह्नेर्दाहं प्रति कारणता निरसितुं शक्यते। ब्राह्मणादिस्थूलदेहानुरूपाः औत्सर्गिकाः संस्काराश्च निपूतदेहाभिमानिभिर्मन्वादिभिः तदनुगृहीतैश्च निर्णेयाः न तु देहाभिमानिभिः। स्वाभाविकी प्रवृत्तिश्च जन्मान्तरसंस्कारानुरूपदेहप्राप्त्यनुरूपैव दृश्यते। अत एव शास्त्रेण चतुर्णां वर्णाना तदितरेषां च देहप्राप्त्यनुरूप एव अधिकारः स्थापितः। एतदेवाभिप्रेत्य

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।

इति भगवद्गीतासु अभिहितम्। शास्त्राज्ञानुरूपकर्मकरणे एव अन्तःकरणशुद्धिरूपा सिद्धिः तत एवच सम्यक् ज्ञानम्। तदप्युक्तं गीतासु,

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। इति।

भागवते च,

स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः। इति।

अन्यथा आचरणे दोषश्चोक्तो गीतायां परधर्मो भयावह इति। एतेन जन्मान्तरसंस्कारेण हीनदेहप्रवेशिताः अनुपासितगुरवः पण्डितंमन्याः स्वबुद्ध्यैव शास्त्रार्थं परिकल्प्य शास्त्रोक्ताधिकारमर्यादां च परित्यज्य आचरन्तः प्रत्यवयन्ति इति सूचितम्। तस्मात्स्वहितेप्सुभिः शास्त्रोक्तमर्यादा अवश्यं पालनीया। तत्रश्च त्रैवर्णिकैरेव वेदादिभ्य आत्मा श्रोतव्यः अन्यैस्तु पुराणादिभ्य एवेति सिद्धम्। पुराणादिश्रवणेन सच्चिदानन्दरूपे आत्मनि देहादिभ्यो विविक्तत्वेन परोक्षं ज्ञाते देहादिषु च तदैव कर्तृत्वेन ज्ञातेषु

